(१) हेमन्तप्रत्यवरोहणम् ॥ ८ ॥
उत्तरेण यजुषा प्रत्यवरुह्योत्तरैर्दक्षिणे पार्श्वे नवस्वस्तरे संविशन्ति ॥ ९ ॥
(२) दक्षिणतः पितोत्तरा मातैवमवशिष्टाना ज्येष्ठो ज्येष्ठोऽनन्तरः ॥ १० ॥
सहायोत्तराभ्यां पृथिवीमभिमृशन्ति ॥ ११ ॥
एवं सर्वेशनादि त्रिः ॥ १२ ॥
ईशानाय स्थालीपाकं श्रपयित्वा क्षत्रपत्यं च प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य स्थण्डिलं कल्पयित्वाऽग्न्युपसमाधानादि ॥ १३ ॥
अपरेणाग्निं द्वे कुटी कृत्वा ॥ १४ ॥

इत्यापस्तम्बीये गृह्यप्रश्ने एकोनविंशः खण्डः ॥

## अथ विंशः खण्डः ॥

(३) उत्तरया दक्षिणस्यामीशानमावाहयति ॥ १ ॥
(४) लौकिक्या वाचोत्तरस्यां मीढुषीम् ॥ २ ॥
मध्ये जयन्तम् ॥ ३ ॥
(५) यथोढमुदकानि प्रदाय त्रीनोदनान् कल्पयित्वाऽग्निमभ्यानीयोत्तरैरुपस्पर्शयित्वा उत्तरैर्यथास्वमोदनेभ्यो हुत्वा सर्वतस्समवदायोत्तरेण यजुषाग्निं स्विष्टकृतम् ॥ ४ ॥
उत्तरेण यजुषोपस्थायोत्तरस्सहौदनानि पर्णान्येकैकेन द्वे द्वे दत्वा देवसेनाभ्यो दशोत्तराभ्य ॥ ५ ॥
(६) पूर्ववदुत्तरे ॥ ६ ॥
ओदनपिण्डं संगृह्य पर्णपुटेऽवधायोत्तरेण यजुषा वृक्ष आसजति ॥ ७ ॥
अत्र रुद्रान् जपेत् ॥ ८ ॥

---

१ 'ख' पुस्तकानुसारेण—हेमन्त [illegible] ॥ उत्तरैर्दक्षिणे [illegible] विशन्ति ॥ इति सूत्रद्वयमेकमेवेद । 'क' पुस्तकानुसारेण [illegible] णम् ॥ उत्तर [illegible] विशन्ति ॥ इति सूत्रद्वयात्मकतया प्रतीयते । ग, घ, पुस्तकयोस्तु 'हेमन्ते'त्यादिसंविशन्ती'त्येकात्मकं सूत्रम् ।

२ दक्षिण [illegible] माता ॥ अवशिष्टाना ज्येष्ठो [illegible] ॥ सहायोत्तराभ्यां पृथिवीमभिमृशन्ति ॥ एवं सर्वेशनादि त्रिः ॥ इति ग' 'घ' पुस्तकयोः पाठः । 'क' 'ख' 'ङ' पुस्तकेषु तु दक्षिण [illegible] सहाय ॥ उत्तराभ्यां [illegible] नादि त्रिः ॥ इति च्छेदो दृश्यते ॥

३ एतदादि सूत्रत्रयमेकं सूत्रं हरदत्तमते । इति 'ख' 'ङ' पुस्तकयोः ।

४ एतत्सूत्रद्वयमेकसूत्रं हरदत्तमते ग घ पुस्तकानुसारेण ।

५ इदमग्रिमं च सूत्रं सूत्रात्मकतया विभक्तं हरदत्तमते क 'ख' पुस्तकयोः । विभागक्रमश्च—यथो ढमुदकानि प्रदाय ॥ त्रीनोदनान् कल्पयि [illegible] ॥ अग्निमभ्यानीय ॥ उत्तरैरुपस्पर्शयित्वा ॥ उत्तरै र्यथास्वमोदनेभ्यो हुत्वा सर्वतस्समवदायोत्तरेण यजुषाग्निं स्विष्टकृतं दशोत्तराभ्य ॥ इति ॥ 'ङ' पुस्तके तु 'यथोढ [illegible] दाय ॥ त्रीनोद [illegible] त्वा ॥ अग्निमभ्य [illegible] त्वा ॥ उत्तरै [illegible] हुत्वा ॥ उत्तरै स्सहा [illegible] त्तराभ्य ॥ इति षोढा विभागः कृतः ॥

६ एतदादि सूत्रत्रयमेकं सूत्रं हरदत्तमते इति क ख पुस्तकयोः ।

(१) प्रथमोत्तमौ वा ॥ ९ ॥

अभित एतमग्निं गाः स्थापयति यथैना धूमः प्राप्नुयात् ॥ १० ॥

ता गन्धैर्दर्भपुञ्जीलेनाऽभ्युक्षति वृषाणमेवाग्रे ॥ ११ ॥

गवां मार्गेऽनग्नौ क्षेत्रस्य पतिं यजेत ॥ १२ ॥

ईशानवदावाहनम् ॥ १३ ॥

चतुर्षु सप्तसु वा पर्णेषु नामादेशं दधाति ॥ १४ ॥

क्षिप्रं यजेत पाके देव ॥ १५ ॥

उत्तराभ्यामुपतिष्ठते ॥ १६ ॥

स्थालीपाकं ब्राह्मणान् भोजयेत् ॥ १७ ॥

क्षैत्रपत्यं प्राश्नन्ति ये सनाभयो भवन्ति ॥ १८ ॥

यथा वैषां कुलधर्मः स्यात् ॥ १९ ॥

इत्यापस्तम्बीये गृह्यप्रश्ने विंशः खण्डः ॥

---

## अथाष्टमः पटलः ॥

## एकविंशः खण्डः ॥

मासि श्राद्धस्यापरपक्षे यथोपदेशं कालाः ॥ १ ॥

शुचीन् मन्त्रवतो योनिगोत्रमन्त्रासम्बन्धानयुग्मांस्त्र्यवरानर्थावेक्षो भोजयेत् ॥ २ ॥

(२) अन्नस्योत्तराभिर्जुहोति ॥ ३ ॥

आज्याहुतीरुत्तराः ॥ ४ ॥

एतद्वा विपरीतम् ॥ ५ ॥

सर्वमुत्तरैरभिमृशेत् ॥ ६ ॥

कल्माषाग्वा प्रतिपूरुषम् ॥ ७ ॥

उत्तरेण यजुषोपस्पर्शयित्वा ॥ ८ ॥

भुक्तवतोऽनुव्रज्य प्रदक्षिणीकृत्य द्वैधं दक्षिणाग्रान् दर्भान् संस्तीर्य तेषूत्तरैरपो दत्त्वो-त्तरैर्दक्षिणापवर्गान् पिण्डान्दत्त्वा पूर्ववदुत्तरैरपो दत्त्वोत्तरैरुपस्थायोत्तरयोदपात्रेण त्रि प्रसव्यं परिषिच्य न्युब्ज्य पात्राण्युत्तरं यजुरन्वावर्त्य त्र्यवरार्ध्यमावर्तयित्वा प्रोक्ष्य पात्राणि द्वन्द्वमभ्युदाहृत्य सर्वतस्समवदायोत्तरेण यजुषा शेषस्य ग्रासवरार्ध्यं प्राश्नीयात् ॥ ९ ॥

या माघ्याः पौर्णमास्या उपरिष्टाद्व्यष्टका तस्यामष्टमी ज्येष्ठया सम्पद्यते तामेकाष्टके-त्याचक्षते ॥ १० ॥

---

१ एतत्सूत्रप्रभृति आखण्डसमाप्ति एकसूत्रतया परिगणितं क ख ङ च पुस्तकेषु हरदत्तमते ।

२ सूत्रत्रयमेतदादि हरदत्तमते एकसूत्रं क ख ङ च पुस्तकानुसारेण ।

(१) तस्यास्सायमौपकार्यम् ॥ ११ ॥

(२) अपूर चतुश्शराव श्रपयति ॥ १२ ॥

अष्टाकपाल इत्येके ॥ १३ ॥

इत्यापस्तम्बीये गृह्यप्रश्ने एकविंश खण्ड ॥

## अथ द्वाविंशः खण्डः ॥

पार्वणवदाज्यभागान्तेऽञ्जलिनोत्तरयाऽपूपाञ्जुहोति ॥ १ ॥

(३) सिद्धशेषवस्तमष्टधा कृत्वा ब्राह्मणेभ्य उपहरति ॥ २ ॥

श्वोभूते दर्भेण गामुपाकरोति 'पितृभ्यस्त्वा जुष्टामुपाकरोमी'ति ॥ ३ ॥

तूष्णी पञ्चाज्याहुतीर्हुत्वा तस्यै वपा श्रपयित्वोपस्तीर्णाभिघारिता मध्यमेनान्तमेन वा पलाशपर्णेनोत्तरया जुहोति ॥ ४ ॥

मांसौदनमुत्तराभि ॥ ५ ॥

पिष्टान्नमुत्तरया ॥ ६ ॥

आज्याहुतीरुत्तरा ॥ ७ ॥

स्विष्टकृत्प्रभृति समानमापिण्डनिधानात् ॥ ८ ॥

अन्वष्टकायामेवैके पिण्डनिधानमुपदिशन्ति ॥ ९ ॥

अथैतदपर दध्न एवाञ्जलिना जुहोति यथाऽपूपम् ॥ १० ॥

अत एव यथार्थ मास शिष्ट्वा श्वोभूतेऽन्वष्टकाम् ॥ ११ ॥

तस्या मासिश्राद्धेन कल्पो व्याख्यात ॥ १२ ॥

सनिमित्तोत्तरान् जपित्वाऽर्थं ब्रूयात् ॥ १३ ॥

रथ लब्ध्वा योजयित्वा प्राञ्चमवस्थाप्योत्तरया रथचक्रे अभिमृशति पक्षसी वा ॥१४॥

उत्तरेण यजुषाऽधिरुह्योत्तरया प्राचीमुदीचीं वा दिशमभिप्रयाय यथार्थं यायात् ॥१५॥

अश्वमुत्तरैरारोहेत् ॥ १६ ॥

हस्तिनमुत्तरया ॥ १७ ॥

ताभ्यां रेफणे पूर्ववत् पृथिवीमभिमृशेत् ॥ १८ ॥

सवादमेष्यन् सव्येन पाणिना कत्र दण्डवाऽऽददीत ॥ १९ ॥

इत्यापस्तम्बीये गृह्यप्रश्ने द्वाविंश खण्ड ॥

## अथ त्रयोविंशः खण्डः ॥

(४) दक्षिणेन फलीकरणमुष्टिमुत्तरया हुत्वा गत्वोत्तरां जपेत् ॥ १ ॥

कुद्दमुत्तराभ्यामभिमन्त्रयेत विक्रोधो भवति ॥ २ ॥

---

१ हरदत्तमते इदमग्रिमं च सूत्रमेकसूत्रतया परिगणितं 'घ' पुस्तके ।

२ इदमग्रिम च सूत्रमेकसूत्रं हरदत्तमते इति क ख पुस्तकयो ।

३ 'सिद्धशेष' इत्येक सूत्रम् 'तमष्टधे'त्यापर सूत्रं क घ पुस्तकानुसारेण हरदत्तमते।

४ एतदादि सूत्रत्रयमेकसूत्रतया परिगणितं हरदत्तमत इति ख ङ पुस्तकयो ।

असम्भवेऽप्सु परेषां स्थूलाटारिकाजीवचूर्णानि कारयित्वोत्तरया सुप्तायास्सम्बाध उपवपेत् ॥ ३ ॥

(१) सिद्ध्यर्थे बभ्रुमूत्रेण प्रक्षालयीत ॥ ४ ॥

सिद्ध्यर्थे यदस्य गृहे पण्य स्यात्तत उत्तरया जुहुयात् ॥ ५ ॥

य कामयेत नाय मच्छिद्येतेति जावविषाणे स्व मूत्रमानीय सुप्तमुत्तरा-याऽत्रि प्रसव्य परिषिञ्चेत् ॥ ६ ॥

येन पथा दासकर्मकरा पलायेरन् तस्मिन्निध्मान्युपसमाधायोत्तरा आहुतीर्जुहुयात् ॥

यद्येन वृक्षात् फलमभिनिपतेद्वयो वाऽभिविक्षिपेद्वर्षतक्र्ये वा बिन्दुरभिनिपतेत्त-दुत्तरयथालिङ्ग प्रक्षालयात ॥ ८ ॥

(२) आगारस्थूणाविरोहणे मधुन उपवेशने कुप्त्वा कपोतपददर्शनेऽमात्यानां शरीररेषणेऽन्येषु चाद्भुतोत्पातेष्वमावास्यायां निशायां यत्रापो न श्टणुयात्तदग्निमुपसमाधानाद्याज्यभागान्त उत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यत ॥ ९ ॥

परिषेचनान्त कृत्वाऽभिमृतेभ्य उत्तरया दक्षिणतोऽश्मान परिधिं दधाति दधाति॥१०॥

इत्यापस्तम्बीय गृह्यप्रश्ने त्रयोविश खण्ड ॥

समाप्तस्तथाऽष्टमश्च पटल ॥

समाप्तमिदमापस्तम्बगृह्यसूत्रम् ॥

---

१ इत पर सूत्रपञ्चकं सूत्रद्वयरूपेण परिगणित दृश्यतेन इति क ख पुस्तकयो । विभागप्रकार श्चेत्थम्—सिध्यर्थे बभ्रु पलायेरन् ॥ तस्मिन्निध्मानि प्रक्षालयीत ॥

२ इदमग्रिम च सूत्रमेकसूत्रतया परिगणित दृश्यतेनेति क पुस्तकम् ।

# आपस्तम्बगृह्यसूत्रस्थानां विषयाणां सूची॥

षष्ठः खण्डः ।

द्वादश. खण्ड. ।

पञ्चदश. खण्ड. ।



षोडश खण्ड ।

**इत्यापस्तम्बगृह्यसूत्रस्यविषयानुक्रमणिका समाप्ता ॥**

श्रीगणेशाय नमः ।

श्रीमदापस्तम्बमहर्षिप्रणीतम्

# गृह्यसूत्रम्

## श्रीहरदत्तविरचितया अनाकुलया
## श्रीसुदर्शनाचार्यकृततात्पर्यदर्शनेन च सहितम् ॥

ॐ

***अथ कर्माण्याचाराद्यानि गृह्यन्ते ॥ १ ॥**



॥ श्री ॥

॥ श्रीगणेशाय नमः ॥

### ❀ गृह्यवृत्तिरनाकुला ❀

ॐ

नमो रुद्राय यद्गृह्यमापस्तम्बेन निर्मितम् ।
क्रियते हरदत्तेन तस्य वृत्तिरनाकुला ॥

द्विप्रकाराणि कर्माणि-श्रुतिलक्षणानि आचारलक्षणानि च । तत्र श्रुतिलक्षणानि व्याख्यातानि । अथेदानीं यानि कर्माणि विवाहप्रभृतीनि आचारात् प्रयोगात् गृह्यन्त ज्ञायन्ते, न प्रत्यक्षश्रुते, तानि व्याख्यास्याम । किं प्रयोजन सूत्रस्य ? स्मार्तानां कर्मणां अधिकार । तेन उदगयनादिनियम, "सर्वत्र स्वयं प्रज्वलितेऽग्नौ" (आप गृ ८-५) इत्येवमादीनि च गार्ह्येष्वेव कर्मसु भवन्ति, न श्रौतेषु । अत्राथशब्देन श्रौतोपदेशानन्तर स्मार्तोपदेश करिष्यामीति वदन् तदपेक्षामस्य दर्शयति । तत्र या परिभाषाः "स त्रयाणां वर्णानां" (आप परि १-२) "मन्त्रान्तै. कर्मादीन् सन्निपातयेत्" (आप परि २-१) "रौद्र, राक्षस" (आप परि २-९) "तदिद सर्वप्रायश्चित्त"मित्येवमाद्यास्ता इहापि भवन्ति (इदकार्याणि) ॥

---

*अत्र सूत्राणां विभाग सुदर्शनमतानुसारेण कृत । यत्र त्वनयोर्वैमत्यं तद् तत्तत्सूत्राधोभाग एव सूचयिष्यते ।

॥ ॐ ॥

## तात्पर्यदर्शनम्।

यो वर्णैरिज्यते नित्यैः कर्मभिश्चोदितैर्निजैः।
तेभ्योऽ(१)पवर्गदो यश्च तं नमाम्यच्युतं हरिम्(२) ॥ १ ॥
आपस्तम्बमुनिं वन्दे मन्दधीहितकाम्यया।
योऽनुष्ठेयपदार्थानां क्रमकल्पमकल्पयत् ॥ २ ॥
यत्कृतं वेदभाष्यमाद्रियन्ते विपश्चितः।
स कपर्दी चिरं जीयाद्वेदवेदार्थतत्त्ववित् ॥ ३ ॥
सुदर्शनार्यः (३)कुरुते गृह्यतात्पर्यनिर्णयम् (४)।
केवलं वैदिकश्रद्धाप्रेरितो मन्दधीरपि ॥ ४ ॥

अथशब्द आनन्तर्यार्थः। तदर्थं पूर्ववृत्तमुच्यते। इह हि यज्ञा एकविंशतिभेदाः। तत्र च सप्त पाकयज्ञसंस्थाः—औपासनहोमो, वैश्वदेवं, पार्वणं, अष्टका, मासिश्राद्धं, सर्पबलिः, ईशानबलिरिति। सप्त च हविर्यज्ञसंस्थाः—अग्निहोत्रं, दर्शपूर्णमासौ, आग्रयणं, चातुर्मास्यानि, निरूढपशुबन्धः, सौत्रामणिः, पिण्डपितृयज्ञादयो दर्वीहोमा इति। (५)सप्तैव च सोमसंस्थाः—अग्निष्टोमो, ऽत्यग्निष्टोम, उक्थ्यः, षोडशी, वाजपेयो, ऽतिरात्रो, ऽप्तोर्याम इति। एते च नित्या नियतप्रदोषादिकालजीवननिमित्तका इत्यर्थः। कुत एते नित्याः? 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' (तै सं ६-३-१० ) इत्यत्र 'यज्ञेन' इत्येकवचनं 'यज्ञं व्याख्यास्यामः' ( आप परि १-१ ) इतिवत् जात्यभिप्रायं मन्यमानस्य भगवतो वसिष्ठस्य 'नैयमिकं ह्येतदृणत्रयं संस्तुतम्' ( व स ११-४७ ) इति वचनेन एषामवश्यानुष्ठेयत्वावगमात्।

तथा 'सायं प्रातरत ऊर्ध्वम्' ( आप गृ ७-१९ ) 'यावज्जीवमग्निहोत्रं जुहोति,' 'वसन्ते ज्योतिष्टोमेन यजेत' ( आप श्रौ १०-२-५ ) इत्येवमादिभिः, 'अहरहः प्रयुज्यते' ( तै ब्रा २-१-३ ), अर्धमासेऽर्धमासे प्रयुज्यते' ( तै ब्रा ३-२-८ ), 'पुनर्भक्ष्योऽस्य सोमपीथो

१ ख—पुस्तके मोक्षपवर्ग, इति पाठः    २ अच्युत हरिम्, अच्युत हरम्, अद्वय हरम् इति च क्वचित्।    ३ ख—सुदर्शनाख्य    ४ ख, ज—दर्शनम्    ५ ज, सप्त च

भवति' ( तै. ब्रा. ३-२-३. ) इत्येवमादिभिः, (१)कर्मण्यारम्भन्यायेन च प्रयोगाभ्यासावगमात् ।

तथैव सोमस्येष्ट्यादेश्चाकरणे पैन्द्राग्नपशुविश्वेष्ट्यादि प्रायश्चित्त विधानेन प्रत्यवायोत्पत्त्यवगमात् । तथैव 'स एता-श्चतुर्होतॄनात्मस्पर-णानपश्यत्' ( तै ब्रा २-३-७ ) इति अग्निहोत्रादिसामान्तानामात्म-निष्क्रयणार्थत्वावगमात् । न तु सौर्यादिवत्(२) केवल काम्या, उक्तहे-तूनां सर्वेषामनुपपत्तः । यत एवैते नित्या अत एव 'अनाहिताग्निता स्तेयम्' ( मनु ११-६५ ) इत्यनाहिताग्नितायाः उपपातकगणे पाठः । अत एव नित्याधिकारविधिप्रयुक्तमाधानम् । काम्यसिद्धिस्तु नित्यानु ष्ठानेनैव गुणफलाधिकारविधया प्रासङ्गिकी भवतु ।

मीमांसकमत्या तु यद्यपि काम्याधिकारविधिप्रयुक्तमाधान, का-म्यानुष्ठानेन च नित्यसिद्धि (३) प्रसङ्गात्, तथापि कल्पसूत्रकाराणां प्रक्रियया साधिकारत्वेन (४)प्रयुक्तिशक्तियोग्यतया अन्यतोऽप्रयुक्तौ नित्याधिकारविधिप्रयुक्तिरप्युपपन्ना । यथा (५)विवरणमते स्वविधिप्र युक्तमध्ययनमिति । तस्मात् मन्दमध्यमोत्कृष्टबुद्धिभि(६)रन्यैरपि त्रैव र्णिकैरेतेऽवश्य कर्तव्या । ते च नानासाधनका नानाशाखान्तरस्थाङ्गका मीमांसान्यायसहस्रनिर्धार्यवचनव्यक्तिका मन्दबुद्धिभिरिदानीन्तनै(७)र्दु र्ज्ञाना' अज्ञाने चानुष्ठातुमशक्याः कथञ्चन प्रत्यवयुरिति कृपाविष्टचेत-स्कतया सूत्रकारेण 'यज्ञं व्याख्यास्यामः' ( आप परि १-१ ) इति परिभाषायामेकविंशतियज्ञान् सामान्यतः (८)सङ्क्षेपतश्च व्याख्याय तावन्मात्रेणानुष्ठानानुपयोगात् 'अथातो दर्शपूर्णमासौ' ( आप श्रौ १-१ ) इत्यारभ्य श्रौता हविर्यज्ञास्सोमसंस्था' (९)क्षामवत्यादयो नैमि-त्तिका' प्रसङ्गात् काम्याश्च (१०)विशेषतो व्याख्याताः ॥

---

१ ख—कर्मारम्भप्रभृतिषु तु, प्र कर्मारम्भे काम्यानां कर्मणां भूयोभूयः कर्तव्यतया सत्या भूया भूयोऽनुष्ठानम्, इति न्याय पूर्वमीमांसायां एकादशाध्यायतृतीयपादे विचारितः कर्मारम्भ-न्याय । ( ११-१-१२ )     २ ख ग—सौर्यादिवत् इति न

३ ग, क, ञ, झ—सिद्धिप्रसङ्गात् । अ यत उपक्रमाभप्रयुक्ताङ्गानुष्ठान प्रसङ्गः ।

४ क, ख, छ, ञ—प्रयुक्तिशक्तियोगितया प्रयुक्तशक्तियोगितया प्रयुक्तशक्तियोग्यतया इति च भेदा     ५ ड,—विवरणादौ     ६ ञ, मतिभि     ७ ञ,—अनुष्ठाना

८ ख क—सङ्क्षेपतश्च इति न,

९ यस्याहिताग्नेरग्निर्गृहान् दहत्यग्नये क्षामवते पुरोडाशमष्टाकपाल निर्वपेत् ( तै सं १-२-५ ) इति गृहदाहे निमित्ते कर्तव्यतया विहितेष्टि क्षामवतीष्टि ।     १० ख—अशाषत,

अथ अनन्तरम् । आचारात्—आङ् इत्युपसर्गस्य अविच्छेदो व्याप्तिर भिप्रेतोऽर्थः । चारः चरणं कर्मसु प्रवर्तनम्, 'पिण्डपितृयज्ञेन चरन्ति' ( आप श्रौ १-७-२ ) इत्यादौ दर्शनात् । तेन यत्सर्वेषु देशेषु सर्वेषु कालेषु च सर्वैस्त्रैविद्यवृद्धैश्शिष्टैर्लौकिकप्रयोजनाभावेऽप्यविच्छिन्नमवि-(१)गानेनाद्रियमाणं, अतएव मूलान्तरासम्भवात् स्वमूलभूतवेदानुमाने लिङ्गभूतं कर्मसु प्रवर्तनं स आचारः । तस्मादाचारात् अनुमितैर्वेदैः यानि औपासनहोमादीनि पाकयज्ञशब्दवाच्यानि पाणिग्रहणादीनि च यज्ञेष्वधिकारिष्यमाणदेहसंस्कारार्थानि कर्माणि गृह्यन्ते ज्ञायन्ते कर्तव्यत्वेन तानि व्याख्यास्याम इति शेषः । यत एव आचारानुमेयवेदावगम्यानि गार्ह्याणि कर्माणि अत एव तेभ्यः प्रथममनुष्ठेयेभ्योऽपि पूर्वं श्रौतानां व्याख्यानं कृतम्, प्रत्यक्षश्रुतिविहितेषु जिज्ञासायाः प्रथमभावित्वात्, अनुमितवेदार्थजिज्ञासाया(२)श्चरमभावित्वात्, जिज्ञासाशास्त्रत्वाच्च व्याख्यानस्येति ।

अत्र च आचारादित्याचारेणोपलक्ष्य गार्ह्याणि कर्माणि वदन्नेव ज्ञापयति—इह साक्षादनिबद्धानामपि येषां 'जमदग्नीनां तु पञ्चावत्तम्' ( आप श्रौ २-१८-२ ) इत्यादीनां पदार्थानामाचारः कृत्स्नदेशादिव्याप्तस्स्यात् तेऽपि वेदमूला एवेति । कृत्स्नदेशादिव्याप्तिश्चाधिकपौनरुक्त्यादिभिर्दृष्टश्रौते दर्शनेन गृह्यान्तरधर्मशास्त्रे न्यायबलेन सम्प्रदायविद्याख्यातृवचनैर्वा निश्चेतव्या । इदं चाधिकारसूत्रम् । यान्यङ्गान्युत्तरत्र 'पुरस्तादुदग्वोपक्रमः' ( आप गृ १-५ ) इत्यादीनि वक्ष्यन्ते तेषां गार्ह्यकर्मार्थता, श्रौतानां सार्वत्रिकाणामपि स्वतोऽनियमार्थता च ज्ञापयितुम् । एतच्च(३)समानोपदेशातिदेशयोरभावात् ॥

केचित्—कर्माणीत्येतद्गृह्ये वक्ष्यमाणान्यस्मच्चरणार्थान्येव, न तु धर्मशास्त्राधिकृतधर्मशास्त्रोक्तवस्त्वर्थानि । तथा श्रौतानन्तरं गार्ह्याधिकारः श्रौतोक्तसार्वत्रिकधर्माणामिह प्राप्त्यर्थ इति ॥

## उदगयनपूर्वपक्षाहःपुण्याहेषु कार्याणि ॥ २ ॥

अनाकुला

उदगयनादिविधानं दक्षिणायनादिप्रतिषेधार्थम् । समुच्चयश्चोदगयनादीनां न विकल्पः । पुण्याहाः देवनक्षत्राणि ज्योतिश्शास्त्रे प्रसिद्धानि यम नक्षत्राणि च तद्विहितानि ।

---

१ अ, ट,—अभिभागेन, २ ट—अनन्तर, ३ ज—समान इति न

तात्पर्यदर्शनम्

उदगयनादयः प्रसिद्धाः । पुण्याहास्त्वह्नो नवधा विभक्तस्यायुजो भागाः-प्रातस्सङ्गव(१)मध्याह्नापराह्णसायशब्दवाच्याः पुण्यनक्षत्रापरपर्यायाः पञ्च । 'समानस्याह्न पञ्च पुण्यानि नक्षत्राणि' ( तै ब्रा १-५-३ ) 'मित्रस्य सङ्गव । तत्पुण्य तेजस्स्यह्' ( तै ब्रा १-५-३ ) इत्यादिश्रुतेः । युग्मास्त्वश्लीलाः, 'चत्वार्यश्लीलानि' (तै ब्रा १-५-३ ) इति श्रुतेः ।

केचित्-कृत्तिकादिविशाखान्तानि देवनक्षत्राणि पुण्याहाः, 'यान्येव देवनक्षत्राणि । तेषु कुर्वीत यत्कारी स्यात् । पुण्याह एव कुरुते' ( तै. ब्रा १-५-२ ) इति श्रुतेः ।

उदगयनेत्यादिरय समासो द्वन्द्वः । तेषु कार्याणि । गार्ह्याणीति शेष । एषां समुच्चय न विकल्पः । एतच्च सामान्यविधानं तत्र तत्र विशेषविधानेनापोद्यते नियम्यते च । एवमुदगयनादीना विधाने सत्यपि क्वचिदनियम प्रतिभासते । 'सर्व ऋतवो विवाहस्य' ( आप गृ २-१२ ) इति वचनात् यदा दक्षिणायनेऽपि विवाहस्स्यात्तदा समावर्तनं तत्कालसमीपकाल एव । इतरथा उदगयनसमावृत्तस्य शरदि विवाहे सति बहुकालव्यवधाने, 'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विज' । ( दक्ष स अ १ ) इति निषेधातिक्रमप्रसङ्गात् ।

किञ्च आश्वलायनगृह्ये 'उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः' ( आश्व गृ १-४ ) इत्यत्र चौलधिकारत्वादेव गोदानस्य उदगयनप्राप्तौ पुनस्तत्र तद्विधिः तद्विकारान्तरे समावर्तने उदगयननियमनिवृत्त्यर्थं इति गम्यते । तथा बौधायनीये समावर्तनस्य चौलविकारत्वादेव आपूर्यमाणपक्षप्राप्तौ पुनस्तत्र तद्विधि (२)रुदगयनानियमार्थं इति गम्यते । तथा गृहनिर्माणप्रवेशयो ज्योतिश्शास्त्रे दक्षिणायनस्यापि विधानात् अविगीतशिष्टाचाराच्च उदगयनानियम । तथा अपरपक्षेऽप्यापश्चम्या ज्योतिश्शास्त्रादेव शिष्टा कर्माणि आचरन्ति । तथैव ज्योतिश्शास्त्रादन्नप्राशन(३)गृहनिर्माणप्रवेशान् रात्रावप्याचरन्ति । तथैव यदा पुण्याहा ज्योतिषोक्तदोषोपहता, तदा अश्लीलेष्वपि तदुक्तगुणयुक्तेषु(४)अविगानेन कर्माण्याचरन्ति । ज्यो-

१ अ—मध्यन्दिन  २ क, ञ च, अ-उदगयननियमार्थं.

तिरशास्त्रमपि (१)वेदाङ्गत्वादगृह्यमाणकारणत्वात्, शिष्टपरिगृहीतत्वाच्च कल्पसूत्रादिवदादरणीयमेव। निर्णये तु शिष्टाः प्रमाणं सर्वत्र ॥

## यज्ञोपवीतिना ॥ ३ ॥

अनाकुला

कार्याणि इत्यनुवर्तते ॥

तात्पर्यदर्शनम्

कार्याणीति सम्बन्धः। ननु यज्ञोपवीतं पाकयज्ञेषु 'प्रागपवर्गाणि' (आप प २-५) इत्यादिना सिद्धम्। विवाहादिहोमेषु जपादिषु च 'होमे जप्यकर्मणि' (आप ध १-१-१५) इत्यादिना। अतोऽत्रैतद्विधिर्व्यर्थः। सत्यम्, यत्राप्राप्ति(२)र्हेमन्तप्रत्यवरोहणादिषु तदर्थाय विधिरसार्थ एव ॥

## प्रदक्षिणम् ॥ ४ ॥

अनाकुला

प्रदक्षिणं च तानि कर्तव्यानि दक्षिणं पाणिं प्रतिगतं प्रदक्षिणम्। उदाहरणं परिस्तरणादि। ननु-तदिदमुभयमविधेयं, पूर्वमेव श्रौतेषु विहितत्वात् 'देवानी'ति (आप प २-१५) तत्रोच्यते, इह मानुषेषु जातकर्मादिष्वप्येतयोः प्रवृत्तिरिष्यत(३)न्तदर्थमयमारम्भः।

तात्पर्यदर्शनम्

कार्याणीत्येव सम्बन्धः। इह तु प्रादक्षिण्यं पाकयज्ञेषु तत्कोटिषु च विवाहादिषु परिभाषासिद्धमपि(४)तद्व्यतिरिक्तगार्ह्यार्थं विधीयते। 'तथापवर्गः' (आप गृ १-६) इति चेत्थमेव ॥

## पुरस्तादुदग्वोपक्रमः ॥ ५ ॥

अनाकुला

अनियमे नियमार्थमिदं वचनम्। दक्षिणतः पश्चाद्वोपक्रमो माभूदिति। परिस्तरणाद्येवोदाहरणम् ॥

तात्पर्यदर्शनम्

कार्यं इति शेषः। अयं तु सर्वेष्वपि यज्ञायज्ञरूपगार्ह्येष्वप्राप्तत्वाद्विधीयते ॥

---

१ ट—वेदाङ्गत्वेन गृह्यमाणत्वात्

२ हेमन्तप्रत्यवरोहणं एकान्नविंशे खण्डे वक्ष्यति सूत्रकार एव।

३ ट—तदर्थोऽय ४ ट ठ—व्यतिरिक्त

## तथापवर्गः ॥ ६ ॥

अनाकुला

तेषामपवर्गोऽपि तथा प्रत्येतव्य । पुरस्तादुदग्वेत्यर्थ । अपवर्ग परिसमाप्ति । न चात्र उपक्रमापवर्गयो समानमिद नियमन क्रियते—पुरस्तादुपक्रान्ते तत्रैव समाप्य उदगारभ्य च तत्रैवेति । किं तर्हि यथासम्भव प्रवृत्ति, तद्यथा परिस्तरणस्य पुरस्तादुपक्रान्तस्य तत्रैवापवर्गासम्भवादुदगपवर्गः । तत्रापवर्गविधेरानर्थक्य, श्रौतेष्वेव परिभाषितत्वात् "प्रागपवर्गाण्युदगपवर्गाणि वे"ति (आप प २-१५) । उच्यते । यद्यपवर्गविधि पुनरिह नारभ्यते,'अपरेणाग्निं द्वे कुटी कृत्वे'(आप गृ १९-१४) त्यत्र दक्षिणापवर्गता प्राप्नोति, अत्रोपक्रमस्योदग्गतत्वनियमात् । अतो विप्रतिषेधे अपवर्गबलीयस्त्व यथा स्यादित्ययमारम्भ । अन्यथा प्रदक्षिणपरिभाषया सामान्यपरिभाषा बाध्येत, किञ्चिद्दैवानि कर्माणीति तत्र विशेषितम् । अतो मानुषेषु कर्मादिष्वपि प्राप्त्यर्थोऽपवर्गनियम ॥

तात्पर्यदर्शनम्

पुरस्तादुदग्वा क्रियापरिसमाप्ति कार्येत्यर्थ । ननु-'पुरस्तादुदग्वोपक्रम' इति विधेरेव समन्तपरिषेकादावर्थसिद्धत्वान्नारब्धव्य 'तथाऽपवर्ग', इति । न, अनारभ्यमाणेऽस्मिन् सूत्रे प्राचीलेखोपयमादेवदीचीलेखा(१)कुटीकरणादेश्चापवर्ग प्रत्यक् दक्षिणा च स्यात । अतस्तद्बाधनायेदमारब्धव्यमेव ।

केचित्—प्राचीनां लेखानामुदगुपक्रम, उदीचीना च प्रागपवर्ग, अग्निपरिस्तरणवदुभयाविध्यसम्भवात(२) इति ॥

## *अपरपक्षे पित्र्याणि ॥ ७ ॥ प्राचीनावीतिना ॥८॥

## प्रसव्यम् ॥ ९ ॥ दक्षिणतोऽपवर्गः ॥ १० ॥

अनाकुला

पितृदैवत्यकर्माण्यपरपक्षे कार्याणि । "मासिश्राद्धस्यापरपक्षे" (आप गृ २१ १) 'या माघ्या पौर्णमास्या उपरिष्टाद्व्यष्टकेति' (आप गृ २१-१०) तत्रापरपक्ष उपदिष्ट । इद तु नियमन यानि गयाश्राद्धादीनि देशविशेषेण पात्रविशेषेण काम्यान्युपदिष्टानि अस्माभिश्च परिगृहीतानि पार्वणे कान्तादीनीत्यत्र तेष्वपरपक्षप्राप्त्यर्थ च । तेन पूर्वपक्षे मृतस्याप

१ आप गृ १९-१४ २ क त्रि पर्यसम्भवात् ।

* इदमत एत सूत्रचतुष्टयमप्येक सूत्रम् ।

रपक्ष एकोद्दिष्टं कर्तव्यं न त्वेकादशेऽहनि। अनुष्ठानञ्चै(त्वे)कादशेऽहनि। मासिश्राद्धस्यापरपक्षविधेः प्रयोजनं तत्रैव वक्ष्यामः।

अथ चापरपक्षविधिः कृत्स्नस्योदगयनादेरपवादो न पूर्वस्मादुदग्वा यथायोगम्। उदाहरणं परिस्तरणादि। तदिदं प्राचीनावीत्यादित्रयमविधेयम्। श्रौतेष्वेव परिभाषितत्वात्, उच्यते—'यज्ञोपवीतिना प्रदक्षिणं' 'तथापवर्गं' इत्येता परिभाषा अविशेषेणात्र प्रकरणे पठिता सामान्यपरिभाषया बाधितत्वात् पित्र्येष्वपि प्राप्नुवन्ति तद्बाधार्थमिदम्।

अत्र च येषां पित्र्याणां स्वातन्त्र्येण स्वकाले प्रवृत्तिः तेषामेवायं प्राचीनावीतविधिः नत्वन्यत्राङ्गत्वेन प्रयुज्यमानानाम्। तेन वैदेषु मानुषेषु च कर्मसु "पितरः पितामहाः" इत्यत्र यज्ञोपवीतमेव भवति।

अपर आह–"तस्मादभ्यातानाः वैश्वदेवाः" ( तै. स. ३-४-५ ) इति दर्शनात् "पितरः पितामहाः" इत्यस्यापि पित्र्यत्वादेव प्राचीनावीतस्याप्रसङ्गः इति। तथा "अपरपक्षे पित्र्याणी"त्यस्मिन्नधिकारे (१)अभिहितं प्राचीनावीतमविशेषेण पित्र्ये कर्मणि साङ्गे प्रवर्तते। तेन पित्र्ये आज्यभागान्ते कर्मणि जयादौ च प्राचीनावीतमेव भवति॥

तात्पर्यदर्शनम्

कार्याणीत्येव। अथ च विधिस्स्वतन्त्रपित्र्योद्देशेन। (२)अङ्गानां तु सहप्रयोज्यानां मुख्यकालत्वेन कालविध्यपेक्षाऽभावात्। एष च न पूर्वपक्षमात्रापवादः। किं तर्हि? सर्वापवादार्थं विध्यन्तरम्। आः! कुत एतदवगम्यते?। 'न च नक्तं श्राद्धं कुर्वीत' (आप. ध २-१७-२३) इति ज्ञापनात् (३)यदि ह्ययं पूर्वपक्षमात्रापवादस्स्यात्, तत उदगयनादीनां त्रयाणामपवादाभावाद्रात्रावप्रसक्ते प्रतिषेधो न स्यात्, (४)अस्ति च प्रतिषेधः, इत्यतो ज्ञायते विध्यन्तरमेवेति। प्रयोजनं त्वविशेषेण दक्षिणायनेऽप्यपरपक्षेऽह्नि काम्यश्राद्धानि कर्तव्यानीति। मासिश्राद्धं तु 'मासि मासि कार्यम्' (आप धर्म २-२६-४) इति (५)वीप्सया दक्षिणायनेऽपि सिद्धमेव।

---

१ ट—विहित

२ पूर्वमीमांसायामेकादशाध्याये प्रथमपादे–प्रधानोपकारजनकत्वादङ्गानां प्रधानफलेनैव फलवत्त्वात् प्रधानेन सहैवानुष्ठाने कर्तव्ये प्रधानस्य ये देशकालकर्त्रादय त एवाङ्गानामपीति प्रधानानुष्ठानदेशकालकर्तृभिरेव प्रधानकर्तृभिरङ्गान्यप्यनुष्ठेयानि–इति सिद्धान्तितम्। अतश्चाङ्गभूतेषु पित्र्येषु प्रधानसम्बन्धिकालेनैवाकाङ्क्षाशान्तेः पृथक् स्वातन्त्र्येण कालापेक्षाया अभावात् अपरपक्षविधिरयं प्रधानभूतेषु पित्र्येष्वेव भवितुमर्हतीति भावः।

३ ट—यदा ४ ट—प्रतिषेधे सति च तेन ज्ञायते ५ ट ड वीप्साबलात्

क्रम्य 'आहिताग्नेस्तान् प्रतीयादुभयोरितरान्' (आप श्रौ १४-१५-५) इत्युपसंहारात्, गार्ह्ये विभ्रेषे आहत्य प्रायश्चित्तविधानेनापेक्षितत्वाच्च तद्विभ्रेषेऽपि युक्त एवेति । तत्तु कपर्दिस्वामिनोक्तम् ॥

जातकर्मादीनां तु (१)स्वकालातिक्रमे सर्वप्रायश्चित्तपूर्वकं तदनुष्ठानम् । कर्माङ्गानां तु लोपे सर्वप्रायश्चित्तं प्राणायामश्च । अनुष्ठानं चाराद्रुपकारकाणामाकर्मसमाप्तेः । द्रव्यसंस्काराणां तु द्रव्योपयोगात् पूर्वमेव सम्भवतात् । पाकयज्ञेष्वाग्निहोत्रिक(२)विधौ चोपनयने चाङ्गव्यापत्तौ 'भुवस्स्वाहा' इति तत्त(३)त्कर्माङ्गाग्नौ होमः । 'अनाज्ञातम्' इति तिसृभिश्च होमो जपो वा । भुवरनाज्ञातविध्ययोर्विकल्पो वा, 'ब्राह्मणावेक्षो विधि' (आप गृ २-११) इति श्रुतितस्संस्कारः' (आप धर्म २-१-८) इति श्रौतप्रायश्चित्तप्राप्त्यर्थत्वात् । ननु-'भुव' इति दक्षिणाग्नौ 'अनाज्ञात' इति चाहवनीये । सत्यम्, इह तयोरग्न्योरभावात् नैमित्तिकानामध्यङ्गत्वेनेतराङ्गवत् प्रधानाग्नौ होमस्य युक्तत्वाच्च ॥

(४) केचित् सर्वेषु गार्ह्यकर्मसु तदङ्गेषु च भ्रेषे 'अनुक्तमन्यतो ग्राह्यम्' इति न्यायेन गृह्यान्तरोक्तानि प्रायश्चित्तान्याहुः, तच्चिन्त्यम् ॥

अलं प्रासङ्गिकेन । प्रकृतमुच्यते । यत्तु 'अपरपक्षस्यापराह्णश्श्रेयान्' (आप धर्म २-१६-५) इति, तदपराह्णविधानार्थमनुवादः, यथा पाकयज्ञे 'सर्वत्रानुवषट्कारो द्विदैवत्यर्तुग्रहादित्यसावित्रपात्नीवतवर्जम्' (आप श्रौ १२ २४ २) इत्यनुवषट्काराभावे प्राप्तेऽपि 'अपि वोपांश्वनुवषट्कुर्यात्' इत्युपांश्वनुवषट्कारविधानार्थे 'नानुवषट्करोति । अपि वोपांश्वनुवषट्कुर्यात्' (आप श्रौ १३-१४-९,१०) इति । 'सर्वेष्वेवापरपक्षस्याहस्सु' (आप धर्म २-१६-७) इति त्वहर्विशेषणार्थम् । अपरपक्षस्याहस्स्वेव मासिश्राद्धं, न पूर्वपक्षस्याहस्सु विकल्पेनाप्यभिमतमिति । इतरथा आशौचादतिक्रान्तेऽपरपक्षे-

दैवात् पितृणां श्राद्धे तु आशौचं जायते यदि ।
आशौचेऽथ व्यतीते वै तेभ्यश्श्राद्धं प्रदीयते ॥

इति स्मृत्यन्तरात् कदाचित् पूर्वपक्षस्याहस्स्वपि विकल्पनेदं स्यात् । नित्यश्राद्धं तु 'एवं संवत्सरम्' (आप ध.२-१८-१२) इति अत्यन्त (५) संयोगे द्वितीयाबलात् पूर्वपक्षेऽपि ॥ ७ ॥

पित्र्याणि कार्याणीति शेषः । इदं तु वासोविन्यासभेदविधानं स्वतन्त्रास्वनन्त्रसर्वपित्र्यार्थम्, 'प्राचीनावीतिना पित्र्याणि' इत्यनेन वा-

१ क-स्वस्वकाला २ क-विधौ तूपनयने ३ ज-कर्माग्नौ ४ ट-अन्ये तु ५ ञ संयोगार्थ

कयेन अविशेषावगमात्, उद्देश्ये पित्र्यमात्रे लब्धे अधिकाप्रकृत(१)स्वातन्त्र्यविवक्षायां वाक्यभेदापत्तेः, अङ्गेष्वपि प्राचीनावीते विधेये 'अपरपक्षे पित्र्याणि' इतिवदनपेक्षितत्वाभावाच्च। तेन यानि स्वतन्त्राणि यथा प्रधानाहुतयः, यानि चास्वतन्त्राणि यथा द्वितीयनिमार्जनादीनि, तानि सर्वाण्येव प्राचीनावीतिना कार्याणि। इत्थमेव 'यज्ञोपवीतिना' इत्यपि। तेन पित्र्याङ्गान्यपि दैवान्याघारादीनि यज्ञोपवीतिनैव। इतराङ्गानां तु पात्रप्रयोगादीनां तन्त्रप्रधानवदेव॥

केचित्—अङ्गानां प्रधानधर्मता (२)न्याय्येति पित्र्याङ्गानि दैवान्यपि प्राचीनावीतिना, दैवाङ्गानि पित्र्याण्यपि यज्ञोपवीतिनेति, तच्चिन्त्यम्॥ ८॥ नयश्च शेषः॥ ९॥

पित्र्येषु कार्य इति शेषः। अत्र 'प्राचीनावीती' (आप परि २ १६) इत्यादिपरिभाषया एषां त्रयाणामपि सिद्धत्वात् अपाकृष्टनित्यषोडशश्राद्धाद्यर्थो विधिः॥ १०॥

## निमित्तावेक्षाणि नैमित्तिकानि॥ ११॥

अनाकुला

प्राचीनावीतिना प्रसव्य दक्षिणतोऽपवर्ग इति पूर्वसूत्रेण सम्बन्धः। निमित्तानि यानि नैमित्तिकानि कर्माणि तानि निमित्तमवेक्ष्य तदनन्तरमेव कर्तव्यानि, न तत्र उदगयनाद्यपेक्षा। "अगारस्थूणाविरोहणे" (आप गृ २३-९) इत्युदाहरणानि। तत्रामावास्यायां निशायामिति वचनात् तावानुत्कर्षः। गृहप्रवेशनं नैमित्तिकमिति केचित्। नेत्यन्ये॥ ८॥

तात्पर्यदर्शनम्

नैमित्तिकान्याग्रयणातिथ्यसीमन्तादीनि निमित्तावेक्षाणि। निमित्तानि व्रीहिपाकादीन्येवानुष्ठानेऽवेक्षन्ते नोदगयनादीनीत्यर्थः। अत्रापि सम्भवतः पूर्वपक्षादेरपवादः॥ ११॥

एवं प्रयोगानुबन्धं कालादिकमुक्त्वा इदानीं सर्वगार्ह्यप्रधानहोमानां साधारणतन्त्रनामानं प्राच्योदीच्याङ्गसमुदायं प्रयोज्यभेदमाह—'अग्निमिध्वा' इत्यादि 'मन्त्रं सन्नामः' (आप गृ २-८) इत्यन्तेन।

## *अग्निमिध्वा प्रागग्रैर्दर्भैरग्निं परिस्तृणाति॥ १२॥ प्रागुदगग्रैर्वा॥ १३॥

---

१ क-अधिकाप्रकृत, ख म छ-अधिकप्रकृत २ ट-कार्येति

* सूत्रद्वयमिदं हरदत्ताचार्यैरेकसूत्रतया परिगणितम्।

अनाकुला

तस्याः पाकयज्ञपरिभाषा । अथ तेषां साधारणतन्त्र वक्ष्यते- अग्निमिध्वेति । तत्रोपसमाधानकर्मेत्युच्यते । अलङ्क कर्माङ्गम् । किं पुनरत्राग्निः ? यस्मिन्नग्नौ पाणिग्रहणम् । अत्र लौकिके कश्चिदात्मकर्मप्रभृति परिग्रहमग्नेरिच्छन्ति । अस्य पुनः उपनयनप्रभृति । अपरे समावर्तनादि । "प्रशास्त्रां स्वयंभ्रमत्वात् न व्यपरिगृह्णीया" इति । यत्र तु अग्नि- र्न्द्वोऽग्निर्नास्ति तत्र आत्रियाङ्गादाहरणं मथनं वा । "यत्र क्वचाग्नि" मित्यत्र तु द्वेषसंस्कारः सर्वत्र भवति यथा स्वकृतसंस्कृतो वृथा । अग्निमिध्वेति प्रकृते पुनरग्निलक्षण येषु तन्त्र न प्रवर्तते तत्रापि परिस्तरणं यथा स्यादिति-अग्नि परिस्तृणाति सर्वत्रेति । उ- पसमाधान तु सर्वार्थसिद्धम् । आगुरुप्रवर्ततौ । अथ वा न सर्वतः प्रागग्नेरेव परिस्तरणं कि कर्हि आवश्यकत्वमेव । ततोऽन्यत्र बलात्तु- रस्ताच्च ॥ ९ ॥

तात्पर्यदर्शनम्

अत्र च अग्निपदार्थविशेषप्रतिपत्त्यर्थ स्मार्तोऽग्निर्निरूप्यते । तत्र याज्ञवल्क्यवचनम्—

कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ॥ ( या स्मृ १-९७. )

इति । अस्यार्थः—गृही गृहस्थः सपत्नीकः स्मार्तं कर्म विवाहाग्नौ औ- पासनाग्नौ कुर्वीत । यस्य कर्मणः प्रयोगे सङ्कल्पावघातान्वारम्भद्रव्य- त्यागानुमत्यादिपदार्थद्वारा पत्न्यास्सहत्वं तत् कर्म स्वौपासने कुर्वीत इत्येतत् । अथ वा यस्य अग्निसाध्यस्य कर्मणः फलं साक्षात् कर्मान्त- रप्रणाल्या वा जायापतिगाम्यन्यतरगामि वा भवति तत्कर्म गृही स्वौ- पासने कुर्यात्, 'कुर्वीत' इत्यात्मनेपदश्रवणादिति ।

एवं च स्मार्तानि पाकयज्ञसीमन्तादीनि औपासनाग्नौ कर्तव्यानि । गृहप्रवेशोऽपि तत्कर्मजन्यवास्तुशान्तेः जायापत्युभयार्थत्वादौपासन एव । तथा पित्रादेर्मातामहादेश्च सपिण्डीकरणमप्यौपासने । सपिण्डी- करणफलस्य प्रेतत्वनिवृत्त्या पितृत्वप्राप्तिरूपस्याभ्युदयिककर्मादिसम्प्रदा सम्प्रदानार्थत्वात्, तत्फलस्य च जायापतिगामित्वादिति ।

अत एव सपिण्डीकरणं सर्वैरपि पुत्रैर्न कर्तव्यम्, एकेनापि कृते पितृतया सम्प्रदानत्वसिद्धेः । अतो यत्र पत्न्यास्सहत्वं क्रियाफलं वा जायापतिगामि तत्कर्म (१)औपासन एव । यदि तु पुत्रोऽनग्निरनुपनी-

१ ट ठ-स्वौपासने

तदादिः सपत्स्नके पूर्वेऽवश्य कर्तव्यत्वात् सपिण्डीकरणं करोति, तदा श्रोत्रियागाराद्वाहृतेऽग्नौ, वाक्यमनेन 'अथ वा श्रोत्रियागारादेव तदौपासनम्' (बौ गृ ६-२) इत्यौपासनस्यस्थत्वात्, आचाराच्च । अनुपनीतोऽपि पुत्रः श्राद्धाधिकार्येव,

अर्हत्यनुपनीतोऽपि विनाप्यग्निं विनाऽध्वरम् ॥ ( मनु २-१७२ )

इति वचनात्, 'न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनात्' ( गौ. ध २-५. ) इति गौतमवचनस्थस्वधाशब्दस्य सकलौर्ध्वदैहिकप्रदर्शनार्थत्वाच्च ।

भ्राता वा भ्रातृपुत्रो वा सपिण्डशिष्य एव वा ।
सपिण्डीकरणं कृत्वा कुर्यादभ्युदयं ततः ॥

इति वचनात् यदा भ्रातृपुत्रादिः करोति तदा यथोक्तसहत्वफलभागित्वयोरभावात् श्रोत्रियागारादाहृताग्नावेव ॥

अन्ये तु-भ्रात्रादिगतपितृत्वप्राप्तिरपि पुत्रगतपूतत्वादिफलवत् पतिगामि फलमित्यौपासने, तच्चिन्त्यम् ॥

तथा जातकर्मचौलोपाकरणसमापनगोदानसमावर्तनान्यपि । तथोपनयनमपि । आचार्यकरणसिद्ध्यर्थ (१)मुपनयनमिति मतेऽपि नाचार्यस्यौपासने । तस्य नित्यधार्यत्वात् 'अपह्नतमग्निं धारयन्ति' ( आप गृ ११-२० ) इति सूत्रविरोधात् । विवाहोऽप्यस्मिन्, निर्मन्थ्ये वा, असम्भवाद्विवाहजन्यौपासनस्य । सम्भवेऽपि प्रथमौपासनस्य, न तस्मिन् द्वितीयादिविवाहः, 'यां कामयेत राष्ट्रमस्यै प्रजा स्यादिति तस्या औपासनं' इति प्रतिभार्यमौपासनभेदावगमात्, बौधायनीये अग्निद्वयसंसर्गविधानात्, आचाराच्च । कर्मार्थस्यौपासनस्य संस्कृते देशे, अनुपसमाहितस्यान्यस्य वाऽग्नेः, 'यत्र क्व चाग्निम्' ( आप ध २-१-१३ ) इति धर्मशास्त्रोक्तविधिना अग्निप्रतिष्ठापनं कर्तव्यम् ॥

केचित्-इदं नाङ्गकं कर्माङ्गमेवेति प्रतिकर्म कार्यम्, उखायां चाग्नेर्धारणमिति ॥

अथ सूत्रं व्याख्यायते । अग्निमिध्वा इन्धीतेत्यर्थः । यद्यप्यर्थप्राप्तमग्नेरिन्धनं तथाप्येतद्वचनात् इद्धमपि पुनरिन्धीत । अत्र विध्यर्थे लिङादौ प्राप्ते क्त्वाग्रहणमिन्धनस्य परिस्तरणपूर्वकालतानियमार्थम् । तेन इन्धनानन्तरं परिस्तरणमेव कार्यं, न तु तयोर्मध्येऽवश्यकार्यमपि सूत्रनिरसनादि कर्मार्थसमारोपकल्पनं च ॥

---

१ क-सिध्यर्थ ग ङ-सिध्यर्थ घ—सिध्यर्थं

नन्वेकस्मिन् सूत्रे इन्धनपरिस्तरणयोर्विधाने वाक्यभेदस्स्यात्, सत्यम्, न तु सूत्रे वाक्यभेदो दोषः, सूचनात् सूत्रमिति निर्वचनात् । इत्थमेव व्याख्याने प्रयोजनं च सर्वत्र कात्स्न्र्येषु । प्रागग्रैर्दर्भैरग्निं परिस्तृणाति । सर्वासु दिक्षु प्रागग्रैः कुशैरग्निं परिस्तृणाति ॥ १२ ॥

अथ वा प्रागग्रैरुदगग्रैश्च दर्भैरग्निं परिस्तृणाति । दक्षिणत उत्तरश्च प्रागग्रैः पश्चात् पुरस्ताच्चोदगग्रैः, 'उदगग्राः पश्चात्पुरस्ताच्च' (आप. श्रौ. १-१४-१५ ) इति श्रौते दर्शनात् । एतान् कुशान् दक्षिणानुत्तरान् करोति, उत्तरांश्चाधरान्,(१) बौधायनभरद्वाजगृह्याभ्यामुक्तत्वात् । दक्षिणतः पश्चा उपरिष्टात्कृत्वाऽधस्तादुत्तर' इति । अत्र 'अग्निमिद्ध्वा' इति प्रकृतेऽप्यग्नौ, 'अग्निम्' इति पुनर्वचनं नियमार्थम्–अग्निमेव परिस्तृणाति नान्यत्(२)कर्मपीति । तेन उत्तरेण पूर्वेण वा निहितमुदकं बहिरेव भवति ॥

केचित्—(३)अतन्त्रकेष्वपि कर्मस्वग्निः परिस्तीर्य एवेति नियमार्थमिति ॥ १३ ॥

*दक्षिणाग्रैः पित्र्येषु ॥१४॥ दक्षिणाप्रागग्रैर्वा ॥१५॥

अनाकुला

तत्र दक्षिणाग्राः पश्चात् पुरस्ताच्च ॥ १० ॥

तात्पर्यदर्शनम्

पित्र्येषु मासिश्राद्धादिषु कर्मसु सर्वासु दिक्षु दक्षिणाग्रैः परिस्तृणाति॥१४॥

यद्वा दक्षिणाग्रैः प्रागग्रैश्च दर्भैः । पश्चात्पुरस्ताच्च दक्षिणाग्रैः, उत्तरतो दक्षिणतश्च प्रागग्रैः । उत्तरानुत्तरान् दक्षिणांश्चाधरान् कुर्यात् । तथा प्रागुपक्रम्य प्रसव्यं परिस्तृणाति ॥ १५ ॥

उत्तरेणाग्निं दर्भान्संस्तीर्य द्वन्द्वं न्यञ्चि पात्राणि

प्रयुनक्ति देवसंयुक्तानि ॥ १६ ॥

अनाकुला

परिस्तरणानन्तरं अग्नेरुत्तरतः पात्रप्रयोगार्थं दर्भान् प्रागग्रान् संस्तृणाति । प्रथितं स्तरणम् । प्रयुनक्ति सादयति । न्यञ्चि न्यग्भूतानि ।

१ 'दक्षिणानुत्तरानुत्तरानधरान् यदि प्रागग्राः' इति बौधायनः ॥
२ ट ठ–अग्न्यन्तरम् ३ ट–अतन्त्रकेषु * सूत्रद्वयमप्येकं सूत्रं हरदत्तमते ।

सर्वाणि च द्रव्याणि प्रयोजनवन्ति पात्रग्रहणेन गृह्यन्ते। तेनोपनयनादौ मेखलादीनामपि सादनं भवति। तत्र यानि देवसंयुक्तानि तानि द्वन्द्वं प्रयुनक्ति। द्वे द्वे इत्यर्थः। पार्वणादीनि देवकर्माणि। अग्निग्रहणमनर्थकमविकृतत्वात् आग्निमिष्वेति। ज्ञापकार्थं चैतत् ज्ञापयति–अग्निपरिस्तरणे विहितो(१)ऽयं पात्रप्रयोगो नानुवर्तते इति। कदा पुनरसौ? दर्भाग्रविशेषस्तम्भाभावे प्रवृत्तिश्च। तेन पित्र्येष्वपि प्रागग्राणामेव संस्तरणमग्नेरुत्तरत तन्त्राभावे च पात्रप्रयोगाभावात्। अधिकारात्त्वग्निप्रतिपत्त्यैव। तदप्युभयप्रतिपत्तव्यं स्यात् अधिकारादेव ॥ ११ ॥

तात्पर्यदर्शनम्

अग्नेरुत्तरतोऽग्रेण दर्भान् संस्तृणाति। एते च प्रागग्राः,(२) बौधायनगृह्यात्। प्रथितं च स्तरणं, समुपसर्गात्। उदक् स्तरणापवर्गः। पित्र्येष्वप्यग्नेरुत्तरत एव प्रागग्रैः,(३) 'उत्तरत उपचारो विहारः,(आप. प २-१० ) इति सिद्धेऽपीहाप्युत्तरेणेति वचनात्, प्रकृतेऽप्यग्नौ' अग्निम्' इत्यधिकशब्दस्य अधिकार्थपरत्वस्य युक्तत्वात्, परिस्तरणवद्विशेषस्यानुक्तश्च। अपवर्गस्तु दक्षिणत एव। देवसंयुक्तानि देवकर्मसंयुक्तानि। पात्राणि दर्व्यादीनि। द्वन्द्वं, द्वे द्वे। न्यञ्चि अधोबिलानि। प्रयुनक्ति सादयति।

ननु–उत्तरत्र 'मनुष्यसंयुक्तानि' 'पितृसंयुक्तानि' इति विशेषणेनैव सिद्धत्वात् 'देवसंयुक्तानि' इति व्यर्थम्। न, दैवानि हि कर्माणि द्विविधानि–पुरुषार्थरूपाणि मनुष्यसंस्कारकाणि च। तत्रोभयत्रापि दैवपात्राणां दर्व्यादीनां द्वन्द्वतासिद्ध्यर्थत्वात् ॥ १६ ॥

तत्र मनुष्यसंस्कारकर्मार्थेषु केषुचित् पात्रेष्वपवादमाह—

## सकृदेव मनुष्यसंयुक्तानि ॥ १७ ॥

अनाकुला

यानि मनुष्यसंयुक्तानि पात्राणि तानि सकृदेव प्रयुनक्ति, न द्वन्द्वम्। मनुष्यकर्माणि विवाहादीनि। एवकारः क्रियाभ्यावृत्तिप्रतिषेधार्थः। पात्रबाहुल्यात् द्वाभ्यां बाहुभ्यां सादनाशक्तावप्युपायेन सकृदेव सादनमिति। केचित् मखलादीनामेव मनुष्यसंयुक्तानां सकृत् प्रयोगमिच्छन्ति, न होमार्थानाम्। वयं तु मनुष्यसंयुक्तानि मनुष्यकर्मसंयुक्तानीत्यवोचाम ॥ १२ ॥

---

१ भर्म ✓

२ 'उत्तरेणाग्निं प्रागग्रान् दर्भान् संस्तीर्य' इति (बौ गृ १-४) बौधायनः। ३ ख ग–इति युक्त

तात्पर्यदर्शनम्

मनुष्यसंयुक्तानि मनुष्यसम्बन्धा संयुक्तानि अग्न्याधानसोमेष्ट्यादीनि सकृदेव क्रियाऽऽवृत्तिं प्रतिहारेण प्रयुनक्ति, पात्रस्य तु कट्यनुप्रयोगेन । केचित्-मनुष्यसंस्कारकर्मसु दर्व्यादीन्यपि सकृदेवेति ॥ १७ ॥

## एकैकशः पितृसंयुक्तानि ॥ १८ ॥

अनाकुला

यानि पितृकर्मसंयुक्तानि तान्येकैकशः प्रयुनक्ति । एकमेकमित्यर्थः ॥ १८ ॥

तात्पर्यदर्शनम्

पितृकर्मार्थानि दर्व्यादीनि स्वधापात्रादीनि च एकमेकं प्रयुनक्ति ॥ १८ ॥

## पवित्रयोस्संस्कार आयामतः परीमाणं प्रोक्षणीसंस्कारः पात्रप्रोक्ष इति दर्शपूर्णमासवत्तूष्णीम् ॥ १९ ॥

अनाकुला

पवित्रयोस्संस्कारः तृणे काष्ठे वे त्येवमादिः । तयोरायामतो म- त् परीमाणं दीर्घप्रमाणं प्रादेशमात्रा (आप श्रौ १-११-९ ) वित्येतत् । प्रोक्षणीसंस्कारः "पवित्रान्तर्हितायामग्निहोत्रहवण्या" ( आप श्रौ. १-११-९ ) मित्यादि । तत्राग्निहोत्रहवण्या इहाभावात् पात्रान्तरं प्र- पद्यते । उत्तानानि पात्राणि इत्यादि पात्रप्रोक्षणम् । तदेतत् पदा- र्थचतुष्टयं दर्शयति । दर्शपूर्णमासयोरिवात्रापि कर्तव्यम् । तूष्णी- मिति मन्त्रप्रतिषेधः । यथा प्रोक्षणे पात्राणामुक्ता क्रिया विकल्पनञ्चाभस्य तदन्तर्भावादेव सिद्धम् । इह तु वचनं नियमार्थम्-पवित्रयोरेवायामतः परिमाणं यथा स्यात् इध्मस्य दर्भाणयोराज्ये प्रास्यमानयो र्मा भूदिति । कथं पुनस्तत्र प्रसङ्गः ? एतदेव ज्ञापयति-अत्रान्यत्रापि दर्शपूर्णमासवत् तूष्णीं संस्कार इति । आज्यग्रहणमध्यामपरिमाणस्य च पवित्रयोर्निष- मोऽयं स्मार्तेन संख्यापरीमाणं दार्शपूर्णमासिकमेवमस्य भवति । तेनाघारविस्मार्तेष्वनुयाजेषु न एकविंशतित्वादयो भवति । उपहोमा- स्त्वनुयाजार्थे भवन्ति ॥ १९ ॥

तात्पर्यदर्शनम्

पवित्रयोस्संस्कारो दर्शपूर्णमासाभ्यां तुल्यं मन्त्रवर्जं कार्यः । समा- वप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कुरुते, तृणं काष्ठं वाऽन्तर्धाय छि-

नत्ति, न नखेन । ततोऽप उपस्पृशेत् । 'रौद्रराक्षसम्' ( आप प २-९ ) इति वचनात् । ततस्तयोर्मूलादाग्भ्याऽऽग्रादद्भिर्मार्जनम् । तयोश्चायामतः परीमाणं दर्शपूर्णमासवदेव । यद्यपि 'पवित्रयोस्संस्कारो दर्शपूर्णमासवत्' इति वचनादेव तद्वदायामत परीमाणं प्राप्तम्, तथापि यदायामत परीमाणं प्रादेशमात्राविति तदेव तद्वत्, न त्विह पृथुत्वेनापि साम्यमित्येवमर्थं 'आयामतः परीमाणम्' इति पुनर्वचनम् ॥

केचित्-पवित्रयोरेवायामत परीमाणं दर्शपूर्णमासवत्, न त्विध्मस्य दर्भाग्रयोश्चाज्ये प्रत्यस्यमानयोरिति नियमार्थं पुनर्वचनम् । एवं ब्रुवतैव सूत्रकारेण दर्शपूर्णमासवत्तूष्णीमिध्मस्य दर्भाग्रयोश्च संस्कारः प्रसिद्धवदभ्यनुज्ञातः । तथैव चाचारः । तेन खादिरं पालाशो वा शुल्बमस्रङ्इध्मो विस्रस्य त्रिः प्रोक्षितव्यः । पार्वणे च पूर्वेद्युस्संभक्तव्य । दर्भाग्रे च 'तृणं काष्ठं वा' ( आप श्रौ १-११-७ ) इत्यादिविधिना संस्कृत्याज्ये प्रत्यसितव्ये । अत्र च यद्यप्ययमर्थ 'आयामत' इति वा 'परिमाण' इति वान्यतरेण सिद्ध, तथापि नियमान्तरार्थमेवमुक्तम् । आयामत एव यत्परिमाणं तदेव पवित्रयो दर्शपूर्णमासवत्, न संख्यात परिमाणम् । तेनेध्मस्य संख्यापरिमाणं दर्शपूर्णमासिकमेव 'एकविंशतिदारुमिध्मम्' ( आप १-५-६ ) इति, आयामस्यैव पवित्रयोर्नियमितत्वात् । यद्यप्यनूयाजाभावादेकविंशत्या न कार्यम्, तथाप्येतद्बलात्तत्स्थाने जयादय कल्प्या —इत्य(१)युक्तं भूयिष्ठं च पूर्वव्याख्यानेनान्यथासिद्धऽपि सूत्रं कल्पयन्ति ॥

प्रोक्षणीसंस्कारोऽपि दर्शपूर्णमासवत्तूष्णीम् । उदगग्राभ्यां पवित्राभ्यां अन्तर्हितायां वैकङ्कत्यां स्रुच्यप आनीय ताभ्यां त्रिरुत्पूय प्रोक्षेत् । पात्रप्रोक्षणमपि तद्वत्तूष्णीम् । उत्तानानि पात्राणि कृत्वेध्मं च विस्रस्य ताभिस्सपवित्रेण पाणिना त्रिः प्रोक्षेत् ॥ १९ ॥

**अपरेणाग्निं पवित्रान्तर्हिते पात्रेऽप आनीयोदगग्राभ्यां पवित्राभ्यां त्रिरुत्पूय समं प्राणैर्हृत्वोत्तरेणाग्निं दर्भेषु सादयित्वा दर्भैः प्रच्छाद्य ॥ २० ॥**

---

* अग्नय पात्राणि च यस्मिन् विह्रियन्ते स विहार । उपचार क्रिया । अनिर्दिष्टदेशा क्रिया विहारस्योत्तरत कार्या इत्यर्थ । इय च १९ पृष्ठस्थ २ मध्यासबन्धिसूत्रस्य टिप्पणीति बोध्यम् ।

१ इति युक्त ।

अनाकुला

पात्रप्रोक्षणानन्तरमपरेणाग्निं प्रणीतायां पवित्रे निधाय तस्मिन्नुदगग्रे पवित्रे अन्तर्धायाप आनीय पवित्राभ्यां उदगग्राभ्यां त्रिरुत्पुनाति प्रागपवर्गम् । अग्निग्रहणं पात्राधिकारात् । (१)अङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यामिति कल्पान्तरे दृष्टो विशेषः । उत्पूय ता अपस्सम प्राणैर्हरति । मुखेन तुल्यमित्यर्थः । हृत्वोत्तरेणाग्निं दर्भेषु सस्तीर्णेषु सादयति । अग्निग्रहणं पात्रैर्व्यवधानं मा भूदिति । सादयित्वा दर्भैः प्रच्छादयति । सर्वञ्च तत् पवित्रहस्तः करोति ॥ १५ ॥

तात्पर्यदर्शनम्

अग्नेरदूरेण पश्चात् पवित्रान्तर्हिते कस्मिंश्चित् पात्रेऽप आनीयोदगग्राभ्यां पवित्राभ्यां त्रिरुत्पुनाति । अत्र प्रकृतयोरपि पवित्रयोः पुनर्ग्रहणात् पाण्योः प्रागग्रत्वमाचारसिद्धं 'अङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्याम्' (आश्व गृ १-३-३ ) इत्या(२)श्वलायनोक्त च ज्ञापितम् । ततस्ता अपस्सम प्राणैर्हृत्वा प्राणस्थानाभ्यां मुखनासिकाभ्यां समम् उद्धृत्य उत्तरेणाग्निं पुनस्स्तीर्णेषु दर्भेषु सादयति, 'दर्भेषु' इति (३)वचनात् । अन्ये पूर्वस्तीर्णेषु । ततो दर्भैः प्रच्छादयेत । अत्र 'अपरेणाग्निम्' इत्यग्निग्रहणं पात्राणामपरेण मा भूदिति । 'उत्तरेणाग्निम्' इति तु पात्रव्यवधाननिवृत्त्यर्थम् ॥ २० ॥

## ब्राह्मणं दक्षिणतो दर्भेषु निषाद्य ॥ २१ ॥

अनाकुला

प्रकृतत्वादग्नेः दक्षिणतः । तत्रापरेणाग्निं दक्षिणातिक्रम्य तूष्णीं तृणं निरस्योपवेशनमिच्छन्ति । अग्रेणाग्निं परीत्यान्ये । 'होत्रब्रह्मत्वे स्वयं कुर्वन् ब्रह्मासनमुपविश्य चि(छ)त्रमुत्तरासङ्गं कमण्डलुं वा तत्र कृत्वाथान्यत् कुर्यात्' (खा०सू०१-१-२६) दिति कल्पान्तरम् । कृताकृतमाज्यहोमेषु परिस्तरणम् । तथाज्यभागौ वा ब्रह्मा चेदा(त्या)श्वलायनः ॥ १६ ॥

तात्पर्यदर्शनम्

अग्निमिध्वेति प्रकृतत्वात् अग्नेर्दक्षिणतो दर्भेषु कश्चिद्ब्राह्मणमुपवेशयेत । न तु दर्शपूर्णमासवद्ब्रह्माणं, समानविधानवचनानां चोदनालिङ्ग

१ अङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति प्राग्रुत्पुनाति ( आश्व गृ-१-३-३ ) इत्याश्वलायनः ।

२ ट ठ—आश्वलायनसूत्र च   ३ ख ग क वचनात् अन्येषु पुनस्तीर्णेषु

नि विनात्र तदीयस्य ब्रह्मणः प्राप्त्यभावात्, 'ब्राह्मणं दक्षिणतो दर्भेषु निषाद्य' इति कृत्स्नविधानाच्च । तेनात्र ब्रह्मधर्माः वरणतृणनिरसनादयो न कर्तव्याः । पितृभूतर्त्विक्पक्षेऽपि यः पितुर्ब्रह्मा स एवात्र निषाद्यत (१)इति नियमो नास्ति ॥

अन्ये तु-श्रौते ब्रह्मा दक्षिणेनाग्निं दर्भेषु निषिष्टो दृष्टः । तथैव बह्वृचानां छन्दोगानां च गृह्ये(२) ब्रह्मेत्येव चोदितः। अतोऽत्रापि 'ब्राह्मण दक्षिणात' इति लक्षणया ब्रह्मैव चोद्यते । तेन सम्भवन्तो ब्रह्मधर्मा इहापीति । तन्न, स्वगृह्यस्थस्य ब्राह्मणशब्दस्य श्रुत्यर्थत्यागेन परगृह्याल्लक्षणाश्रयणस्यायुक्तत्वात् । न च दक्षिणतो निषादितस्य ब्राह्मणमात्रस्य ब्रह्मत्वं सूत्रकारस्येष्टम् । यदि हि तथा स्यात्, 'यं ब्राह्मणं विद्यां विद्वांसं यशो न र्च्छेत्' (आप श्रौ १४-१३-७) इत्यत्रापरैरेवाक्षरैः 'ब्रह्मणे वरं ददाति' इति ब्रूयात्, न पुनस्त्रिगुणैः 'यो दक्षिणत आस्ते तस्मै वरं ददाति' (आप. श्रौ १४-१३-९) इति । सम्भवतां धर्माणां प्राप्तौ मन्त्राणामपि प्राप्तिर्दुर्वारा । 'ब्राह्मण दक्षिणतो निषाद्य' इत्यत्रानुक्तानां मन्त्रादीनां परिसंख्येय चेति वदतां चोक्तरीत्या स्वार्थपरत्वे सम्भवति (३)दोषत्रययुक्तपरिसंख्याश्रयणं निर्हेतुकम् ॥ २१ ॥

आज्यं विलाप्यापरेणाग्निं पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरुप्योदीचोऽङ्गारान्निरूह्य तेष्वधिश्रित्य ज्वलतावद्युत्य द्वे दर्भाग्रे प्रत्यस्य त्रिः पर्यग्नि कृत्वोदगुद्वास्याङ्गारान् प्रत्यूह्योदगग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पूय पवित्रे अनुप्रहृत्य ॥ २२ ॥

इत्यापस्तम्बीये गृह्यप्रश्ने प्रथमः खण्डः ॥

---

१ अ-निषाद्य इ २ तदर्त्विक् ब्रह्मा सायमातर्होमवर्जम्' (खा गृ १-१-२२) इति खादिर ।
'ब्रह्मा च धन्वन्तरियज्ञशूलगववर्जम्' (आश्व गृ १-३-६) इत्याश्वलायन ।
३ ट दोषत्रयोपेत परिसंख्यायास्त्रैदोष्य च स्वार्थहानि, परार्थस्वीकार, प्राप्तबाधश्चेति ।

अनाकुला

**अथाज्यसंस्कारः** तत्र विलापनमाज्यस्य यस्मिन्कस्मिंश्चिदग्नौ भवति उत्तरत्राज्यग्रहणात् । निर्वाप आनयनम् । पुनराज्यग्रहणमनाधारेऽपि कर्माणि संस्कार आज्यस्य यथा स्यात् । आज्यं सर्वत्र निरुप्य जुहोतीति । निरूहणं पृथक्करणम् । उद्वचनं पित्र्येष्वपि यथा स्यात् । एतेनोद्वासनं व्याख्यातम् । अवद्योतनं ज्वलता तृणेनावदीपनम् । तत्र द्वे दर्भाग्रे पवित्रवत्संस्कृत्या ज्ये प्रत्यस्यति प्रक्षिपति । द्वे ग्रहणमके केऽस्यम्याग्निहोत्रहवण्यस्य विकल्पस्य प्रतिषेधार्थम् । तेनाग्निहोत्रिकेऽपि तन्त्रे द्वे एव दर्भाग्रे भवतः । ततस्तदाज्यं त्रिः प्रदक्षिणं पर्यग्नि करोति आज्यस्य सर्वतोऽग्निं त्रिरावर्तयति तृणेनोल्मुकेन वा । तत्र पित्र्येष्वपि प्रदक्षिणं पर्यग्निकरणमिच्छन्ति । उद्वासनं निहरणम् । प्रत्यूहनमग्निना संसर्जनम् । पुनराहारः पुनराहृत्याहृत्य । त्रीण्येतानि उत्पवनानि प्रत्यगपवर्गाणि । अनुप्रहरणमग्नौ, प्रकरणात् (१)"विस्रस्याग्निस्संस्पृश्ये" ति कल्पान्तरात् ॥ १७ ॥

इति श्रीहरदत्तविरचितायां गृह्यसूत्रवृत्ता-
वनाकुलायां प्रथमः खण्डः ॥

---

तात्पर्यदर्शनम्

**यद्यपि** 'सर्पिराज्यं प्रतीयात्' (आप प १-२५ ) इति परिभाषासिद्धं विलापनं, तथापि विलीनमप्याज्यं होमार्थेऽग्नौ कर्मार्थं पुनर्विलापयेत् । ततोऽग्नेः पश्चात् स्थापितायां पवित्रान्तर्हितायामाज्यस्थाल्यां तदाज्यमानयेत् । 'आज्यं विलाप्य' इति प्रकृतेऽपि पुनराज्यग्रहणमाज्यस्यैव निर्वापादयः, न पुनः 'दध्न एवाञ्जलिना जुहोति' ( आप गृ २२-१० ) इत्यत्र(२) पशुप्रभवस्य होमद्रव्यत्वेऽपि(३) यदीयतदीयन्यायाद्दध्नो भवेयुरित्येवमर्थम् ॥

केचित्—अतन्त्रकेऽपि कर्मण्याज्यं निर्वापादिभिस्संस्कार्यमित्येवमर्थमिति ॥

अग्निमित्यग्नेरेव पश्चात् न ब्राह्मणस्येति । केचित्तु—अन्यस्मिन्नग्नौ विलापनं, होमार्थाग्नेरेव पश्चान्निर्वाप इत्येवमर्थमिति ॥

---

१ विस्रस्य पवित्रे अग्निमंस्पृश्याग्नावनुप्रहरतीति (बौ गृ १-२-११) बौधायन ॥

२ क अ—पशुप्रभवहोमद्रव्यत्वेऽपि ग ङ-पशुप्रभवहोमद्रव्यत्वे समानेपि

३ ग यदि तदीयन्यायाद्दध्नो निर्वापादयो न भवेयु

अथाङ्गारानुदीचो निरुह्य निर्वर्त्य, तेष्वङ्गारेषु आज्यमधिश्रित्य, ज्वलता तृणेनावद्युत्य अबोगामिन्या दीप्त्या द्योतयित्वा, द्वे दर्भाग्रे अनियतायामे तृणाद्यन्तर्धाय छित्वाऽद्भिस्संस्पृश्य ते युगपदाज्ये प्रक्षिपेत् 'द्वे' इत्यधिकशब्दात्, आचाराच्च । अथोल्मुकमादायाज्यं प्रदक्षिणं त्रिः पर्यग्नि कृत्वा समन्ततोऽग्निमावर्त्य तदुदगवतारयत् । अत्र निरूहणोद्वासनयोरुदगपवर्गस्य 'तथाऽपवर्गः' (आप गृ १-६) इति सिद्धस्य पुनर्विधानमेतयोर्नित्यमुदगेवापवर्ग, न तु दैवे विकल्पेनापि प्रागपवर्गः, नापि पित्र्ये दक्षिणतोऽपवर्ग इति नियमार्थम् । तथैव पित्र्येष्वेतयोर्मध्यस्थं पर्यग्निकरणमपि(१)सन्दंशन्यायादुदगपवर्गं प्रदक्षिणमेव । इत्थमेव शिष्टाचारः । ततोऽङ्गारान् पूर्वं निरूढान् प्रत्यूह्य पुनरायतनस्थाग्निना संयोज्य । अथाज्यसंस्कारकाणां अङ्गाराणां प्रत्यूहनविधानात् 'अपवृक्ते कर्मणि' (आप परि ४-२३) इति न लौकिकत्वम् । अवद्योतनपर्यग्निकरणाग्नयोस्तु यदा आयतनस्थादुपादानं तदा तयोरग्नयोरपवृत्तकर्मत्वेन लौकिकत्वात् त्यागः । यदा तु निरूढात् तदा तस्मिन्नेव क्षेप । अथ पूर्ववदुदगग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पूय पुनराहृत्याहृत्य त्रिरुत्पूय । अत्र पुरस्तादारभ्य पश्चान्नीत्वा पुरस्तात् परिसमाप्तिः । केचित्—आज्ञं बलाद्विपरीतमाहुः ॥

ततस्ते पवित्रे अनुप्रहृत्य आचारानुकूलं प्रहृत्य, यदि ग्रन्थिस्स्यात् तदा विस्रस्याद्भिस्संस्पृश्य प्रागग्रे अग्नौ प्रहरेदित्यर्थः ॥ *२२ ॥

इति श्रीसुदर्शनाचार्यकृते गृह्यतात्पर्यदर्शने प्रथमः खण्डः ॥

---

१ एकोद्देशेन क्रियमाणयोरङ्गयोर्मध्ये विहितत्वं सन्दंशः ।

* अस्मिन् खण्डे हरदत्तमते सूत्राणां सङ्ख्या सप्तदश (१७) सुदर्शनमते च द्वाविंशति (२२) इति बोध्यम् ।

# अथ द्वितीयः खण्डः ॥

येन जुहोति तदग्नौ प्रतितप्य दर्भैः संमृज्य पुनः प्रतितप्य प्रोक्ष्य निधाय दर्भानद्भिस्सँस्पृश्याग्नौ प्रहरति ॥ १ ॥

अनाकुला

समार्जनं स्रुग्वत्। प्रतितपनं न्यग्भूतस्य तपनम्। अग्निग्रहणमनर्थकम्, अन्यत्र प्रतितपनस्यासम्भवात्। तत्क्रियते दर्शपूर्णमासयोस्सम्मार्जने ये धर्मास्तेषामिह प्राप्त्यर्थमाहवनीये गार्हपत्ये वा चोदितं यत्प्रतितपनं तदिहाग्नौ भवतीति। अग्निमात्रं विधीयते। अन्यत् समानं "स्रुवमग्ने" (आप श्रौ २-४४) रित्यादि। अग्नौ प्रहरतीति पुनरग्निग्रहणं स्रुक्समार्जने दृष्टवैकल्पिकमग्नौ प्रहरणं मा भूदिति। अतोऽपि विज्ञायते स्रुक्समार्जनधर्मा इह प्रवर्तन्त इति। पाकयज्ञेषु च दर्व्या होमः, कल्पान्तरे दृष्टत्वाद्दर्शनाच्च। यदयं समावर्तने दर्व्यामाधायाज्येनाभ्यानयत्नित्यन्यपरे वाक्ये दर्वीं प्राप्तां दर्शयति। यच्चायं सकृदुपहत्येति उपघातं स्थालीपाकाद्दर्शयति तदपि नादर्व्यामुपपद्यते। तत्राज्यहोमेष्वेका दर्वी। स्थालीपाकेषु द्वे होमार्थं चावदानार्थं च। उभयोरपि सम्मार्जनम्। अवदानस्य होमार्थत्वात् यथाग्निहोत्रे स्रुवस्य। तत्र दर्वीमग्नौ प्रतितप्येति वक्तव्यम्। येन जुहोतीति किमुच्यते? "मध्यमेनान्तमेन वा पलाशपर्णेन" त्यत्रापि यथा स्यात्, अग्निहोत्रे आग्निहोत्रिके च तन्त्रे यथा स्यादिति। यद्येवमञ्जलेरपि प्रसङ्गः। विवाहसर्पयज्ञादिषु ज्ञापकात् सिद्धम्। यदयमौपकार्ये पार्वणवदिति यत्न करोति तत् ज्ञापयति—अञ्जलिहोमा अधर्मग्राहका यावदुक्तधर्माण इति। तेन सादनादि नाञ्जलेर्भवति ॥ १ ॥

तात्पर्यदर्शनम्

येन पात्रेण दर्व्या स्रुवेणाञ्जलिना वा जुहोति तदग्नौ प्रतितप्येत्यादि व्यक्तार्थम्। दर्व्याश्च होमपात्रत्वं 'दर्व्यामाधायाज्येनाभ्यानायन्' (आप गृ. १२-९) इत्यन्यपरे वाक्ये सिद्धवद्दर्शनात्, आचाराच्च। बोधायनेन तु (१) 'निर्ऋतिगृहीता वै दर्वी' इति दर्वीनिन्दा स्रुवविधानार्था, न

१ बौ-गृ १-२-१४

तु दर्व्यौ निषेधार्थौ। अतो दर्वीस्रुवयोर्विकल्पः। तत्र केवलाज्यहोमेषु एकैव दर्वी स्रुवो वा, उपस्तरणाद्यभावात् चर्वादिहोमेषु तु द्वे दर्व्यौ स्रुवौ वा उपस्तरणाद्यर्थं होमार्थं च। उपस्तरणाद्यर्थस्यापि संस्कारः, (१)उपस्तरणादि प्रदानान्तस्य होमपदार्थत्वात्, श्रौते स्रुवस्यापि संस्कारदर्शनात्, आचाराच्च। दर्व्यादीनां त्रयाणां तन्त्रवद्धोमेष्वेव संस्कारः, (२) अतन्त्रकेषु तन्त्रान्तर्गतधर्मानुपपत्तेः। तेन 'अनुगतेऽपि वांत्तरया जुहुयात्' (आप गृ ५-१८) 'सर्षपान् फलीकरणमिश्रान्' (आप गृ १५-६) इत्यादिषु न दर्व्यादीनां संस्कारः। अत्राग्नौ प्रतितप्याग्नौ प्रहरतीत्यर्थसिद्धाग्निग्रहणमेवंनामायं कृत्स्नविधिरिति ज्ञापयितुम्। तेन 'स्रुवमग्रे' (तै ब्रा ३-३-१) इत्याद्यैष्टिकस्रुक्संमार्जनधर्माणामिहानुपपत्तिप्रसङ्ग एव।

केचित्—अग्नौ प्रतितप्याग्नौ प्रहरतीति प्रयोजनान्तरशून्यादग्निग्रहणादैष्टिकस्रुक्संमार्गधर्मा इहापि भवन्तीति।

प्रतितपन त्वस्मिन्नेवाग्नौ। इह च संमार्गधर्माणामप्राप्त्यैव प्रहरणम्, न पुनर्वैकल्पिकम्। तथा 'येन जुहोति' इत्यत्र सामान्यवचनम् 'मध्यमेनान्तमेन वा पलाशपर्णेन' (आप गृ २२-४) इत्याद्यमन्त्रकेऽपि कर्मणि आग्निहोत्रिके च विधौ होमार्थपात्रस्यापि संस्कारो यथा स्यादित्येवमर्थम्। अञ्जलिस्वपूपहोमे अवदानप्राप्त्यर्थेन 'पार्वणवत्' (आप गृ २२-१) इति यत्नेनाञ्जलिहोमा अपूर्वा यावदुक्तधर्माण इति ज्ञापनाच्च संस्कार इति॥ १॥

## शम्याः परिध्यर्थे विवाहोपनयनसमावर्तनसीमन्तचौलगोदानप्रायश्चित्तेषु॥ २॥

अनाकुला

अथ परिधीन् परिदधाति। दर्शपूर्णमासवत्सर्वं तूष्णीं तत आघारसमिधौ। कुत एतत्? प्रासङ्गवदभ्यनुज्ञानाच्छम्याः पारिध्यर्थं इति (३)परिध्यर्थे परिधिकार्ये इत्यर्थः। शम्या लोकप्रसिद्धा युगप्रान्तयोश्छिद्रेषु कीलरूपाः काष्ठविशेषाः। तासां सहेध्मेन संनहनम्। प्रायश्चित्त अद्भुतोत्पातप्रायश्चित्तम्। विवाहे च हृदयसंसर्गार्थं सर्वत्र शम्याः। विवाहादिभ्योऽन्यत्र सर्वत्र पार्वणादिषु परिधय एव। चौलग्रहणमनर्थकं सीमन्तादि-

---

१ अवदानादिप्रदानान्तस्य एकपदार्थत्वस्थापनात् तेनैव न्यायेनात्रापि तथात्वादित्यर्थः।

२ क घ ङ अतन्त्रकेषु न,

३ परिध्यर्थे शम्या कार्या इत्यर्थः।

देशात् सिद्धम् । ज्ञापकार्थन्तु, एतत् ज्ञापयति—विवाहादिष्विह सर्वा तिंतिष्वेव शम्या', न तैरातिदिष्टेषु इति । तेन सीमन्तादतिदिष्टे पुंसवने परिधय एव । पार्वणादिषु च एकहोमेषु तथा "एवमत ऊर्ध्वं" मिति वैवाहिकेन स्थालीपाकादिति दर्शनात् प्रसङ्गः ॥ २ ॥

तात्पर्यदर्शनम्

**विवाहादिषु कर्मसु** परिध्यर्थे परिधीनां कार्ये परिधीनां स्थाने इति यावत्, **शम्या** युगकीलका भवन्ति । ताश्च पलाशादीनामन्यतमेन कल्प्ता परिधिस्थौल्यायामाः, तत्स्थानापन्नत्वात् । युक्तं चैतत्, यस्मादेव-विधविषये वार्तिककारपादैरुक्तम्—

'तत्रभवन्ती(१) खलेवाली खादिरी किन्तु बाध्यते । इति ॥

अत्र विवाहशब्देन स्थालीपाकवर्जित साङ्गो विवाहो गृह्यते । तद्वर्जनकारण पार्वणेनेत्यत्र वक्ष्याम । सीमन्ते शम्याविधानादेव (२)तद्विकारे चौले (३)चालविकारे च गोदाने शम्याप्राप्तावपि तयोर्ग्रहण सीमन्तविकारेऽपि पुंसवने तासां निवृत्त्यर्थम् । प्रायश्चित्त च 'अगारस्थूणा विरोहणे' ( आप गृ २३-९ ) इत्यादिना विहितम । अत्र च 'पलाशकार्ष्मर्य' ( आप श्रा १-५-८ ) इत्यादिसूत्राकगुणयुक्तांस्त्रीन् परिधीन् सम्पृष्ठान् । 'परिधीन् परिदधाति' ( तै ब्रा ३-३-७ ) इत्यादि विधानात् तूष्णीं परिदध्यादिति सूत्रकारस्याभिप्राय, 'शम्या परिध्यर्थे' इति सिद्धवत्परिधीनङ्गीकृत्य तत्स्थाने शम्याविधानात्, आचाराच्च ॥ २ ॥

अग्निं परिषिञ्चन्यादितेऽनुमन्यस्वेति दक्षिणतः प्राचीनमनुमतेऽनुमन्यस्वेति पश्चादुदीचीन सरस्वतेऽनुमन्यस्वेत्युत्तरतः प्राचीनं देव सवितः प्रसुवेति समन्तम् ॥ ३ ॥

अनाकुला

परिषेचनमुदकेन पर्युक्षणम् । अग्निग्रहण परिध्यधिकाराद्बहिः परिधिमाभूदिति । प्राचीनमुदीचीनमित्युच्यते प्रागुदग्वा(ग्चा)यत परिषेचनकर्म यथा स्यादिति । तथापवर्गस्तु परिभाषासिद्ध एव । 'देव सवित प्रसुवे'ति एतावान् मन्त्रः, कल्पान्तरेषु भूयस्सु तथा दर्शनात् । बोधायनीये च विस्पष्टमेतत् 'अन्वमस्था प्रासावीरिति मन्त्रान्तान् सन्नमयती' ( बौ.

१ खल बलीवर्दबन्धनार्थं निखाता स्थूणा खलेवाली ।

२ ख ग तद्विकारान्तरे ३ ख ग छ चौलविकारान्तरे

गृ १-४-७) ति । (१)छन्दोगानामेव त्वय मन्त्रादि' । समन्त सम इत्यर्थः । तत्र पुरस्तादुपक्रम्य प्रदक्षिण सर्वत्र प्रतिमन्त्रमुदकदानम् ॥ ३ ॥

तात्पर्यदर्शनम्

अग्निमेवोदकेन परिषिञ्चति न परिस्थाद्यङ्गमपि । तद्विधिमाह-अदितेऽनुमन्यस्वेत्यादिना । प्राचीन प्रागायनम् । उदीचीनमुदगायतम् । समन्त सर्वतः । अत्र 'देव सवित' प्रसुव' इत्येतावानेव मन्त्र, नर्व(२) आदिप्रदेश । तथा नोत्तरे परिषेचन 'प्रासावी' रिति प्रसुवपदस्योह' । वैश्वदेवकाण्डे एकाग्निविधावेवाम्नातानां 'अदितेऽनुमन्यस्व' इत्यादीनामप्रधानां यजुषां पूर्वोत्तरपरिषेचनरूपेष्वेषु व्यापारेषु(३) श्रुतिरूथानाभ्यां विनियोगात्, वाजपेयप्रकरणस्थाया ऋच' स्थानेऽत्रापि विनियोगायोग्यत्वात्, आदिप्रदेशे समुदायलक्षणापत्ते, यजु प्राये मन्त्र एके ऋचोऽप्रतीतत्वात्, ऊहपक्षे आर्षपाठबाधप्रसङ्गात्, 'तस्मादृच नोहेत्' इति बह्वृचश्रुतिविप्रतिपिद्धस्य ग्रहणप्रसङ्गात्, अस्मदीयानामाचाराच्च । विस्पष्ट चैतत् बोधायनानां, 'अन्वमस्था प्रासावीरिति मन्त्रान्तान् स नमयति' (बो गृ १-४-३७) इति । एवं चोत्तरपरिषेचने 'अन्वमस्था' प्रासावी' इति पूर्वमन्त्रेभ्यो विशेषमात्रस्य पाठ', न पुनरूह' । यथाशौ 'एतेनैव त्रैष्टुभेन छन्दसाऽहरिष्टकामुपदध्ने' इति । सप्तमशब्दश्चात्र गौण' । अत एवैते मन्त्रा वैश्वदेवकाण्डमुपाकृत्य प्रागुत्सर्जनादध्येतव्या, ब्रह्मयज्ञपारायणयोश्च ॥ ३ ॥

## पैतृकेषु समन्तमेव तूष्णीम् ॥ ४ ॥

अनाकुला

अक्रियमाण एवकारे समन्तपरिषेचने मन्त्रप्रतिषेधार्थमेतत् स्यात् । एवकारात्तु दक्षिणत प्राचीनमित्यादे त्रयस्य निवृत्ति ॥ ४ ॥

तात्पर्यदर्शनम्

पैतृकेषु कर्मसु समन्तमेव परिषिञ्चति, न दक्षिणत' प्राचीनम्' इत्यादि । तच्च तूष्णीम् ॥ ४ ॥

---

१ देव सवित प्रसुव यज्ञ प्रसुव यज्ञपतिं भगाय दिव्यो गन्धर्व, केतपू केत न पुनातु वाचस्पतिर्वाच न स्वदतु इति सम्पूर्णो मन्त्र ।

२ आदिरिति । आ दितादिरा मन्त्रा (आप ग २-३) इ यनेन सूत्रेण मन्त्रस्यादिग्रहणेन कृत्स्नो म त्रो ग्रहीतव्य इति नियमितम स न्यायो नात्र प्रवर्तत इति भाव ।

३ निरपेक्षो रव श्रुति । स्थान क्रम पाठसादेश्यानुष्ठानमादेश्यरूप ।

